उष्णिक् (८+८+१२)=२८ वर्णाः

बृहती (९+९+९+९)=३६ वर्णाः

पङ्क्तिः (८+८+८+८+८)=४०

# छान्दसग्रन्थपरम्परा

रचयिता

गायत्री (८+८+८)=२४ वर्णाः



अनुष्टुप् (८+८+८+८)=३२ वर्णाः

## डॉ. रामकिशोर मिश्रः

विराट्पङ्क्तिः (१०+१०+१०+१०)=४०

त्रिष्टुप्—(११+११+११+११)=४४ वर्णाः

जगती—(१२+१२+१२+१२)=४८ वर्णाः

# छान्दसग्रन्थपरम्परा

## (प्रथमभागः)

रचयिता प्रकाशकश्च

**डॉ० राम किशोर मिश्रः**

साहित्य-व्याकरणाचार्यः, एम्. ए., पी-एच. डी.

संस्कृतविभागाध्यक्षः

महामना मालवीय महाविद्यालयः

खेकड़ा-२०११०१ (मेरठ) उत्तरप्रदेशः, भारतम् ।



मूल्यम् — ३०/-

प्रकाशनतिथिः

पौषकृष्णपञ्चमी, २०५०

२-१-१९९४

मुद्रक :- यमुनामुद्रणालयः, बागपत (मेरठ) उ. प्र.

# समर्पणम्

ओ३ङ्कारमिश्रसम्भूतो होतीलालः पिता मम ।
देवी प्रातः स्मरणाया मातृत्वेन कलावती ।।
ययोरंशेन मे देहे रक्तं वहत्यहर्निशम् ।
ताभ्यां वै छान्दसग्रन्थपरम्परा मयार्ऽपिता ।।



## समर्पको राम किशोर मिश्रः

भारत उत्तरप्रदेश एटाजनपद-सोरोंवासी,
वाणोदधिशून्याऽक्षिवत्सरे शूकरक्षेत्रवासवान् ।
होतीलालकलावतीसुतो रामकिशोरमिश्र इह
वैदिकलौकिकग्रन्थैश्छान्दसपरम्परां विरचितवान् ।।

— ० —

# प्राक्कथनम्

एतन्मम छान्दसग्रन्थपरम्परायां मौलिकं छान्दसविवेचनम्। छन्दःशास्त्रस्येतिहाससन्दर्भे मयेयं रचना कृता। रचनेयं छान्दसान्नव ९ वैदिकान् छन्दःशास्त्रीयग्रन्थान्, २७ सप्तविंशतिसंख्याकान् लौकिकान् छन्दःशास्त्रीयग्रन्थान्, नव ९ च छन्दःशास्त्रीयटीकाग्रन्थान् आश्रित्य छन्दोलक्षणकाराणां जीवनकालाद्यधिकृत्य तेषां छन्दोयोगदानं प्रकाशयति। छान्दसग्रन्थपरम्पराया भागद्वयमस्ति। अस्याः प्रथमभागे चतुरध्यायाः सन्ति। द्वितीयाध्यायतश्चतुरध्यायपर्यन्तं वैदिकसंस्कृतच्छन्दोविवेचनमस्ति। द्वितीयभागे दशस्वध्यायेषु लौकिकसंस्कृतच्छन्दोविवेचनम्।

अत्र प्रथमेऽध्याये मया ४५ पञ्चचत्वारिंशत्संख्याकास्ते ग्रन्थाः प्रस्तुताः, येषु स्वतन्त्रं छन्दोविवेचनं प्राप्यते। अस्यग्रन्थस्य निर्माणे मया शताधिकाश्छन्दोग्रन्थाः पठिताः, तेषामत्र यत्र तत्रोल्लेखः कृतः। प्रस्तुतरूपरेखायां पञ्चमे पृष्ठे मया यत्कालक्रमविभाजनं प्रस्तुतम्, तन्मया श्रीयुधिष्ठिरमीमांसककृतच्छन्दोरचनायां वैदिकच्छन्दोमीमांसायां दृष्टम्। प्राचीनभारतीयाऽऽर्यपरम्परा चतुर्युगकालक्रमविभाजनस्याऽऽधारः। अनेन कालक्रमविभाजनेन प्राचीनाश्छान्दसाचार्याः सहमताः सन्ति।

द्वितीयेऽध्याये नववैदिकच्छन्दःशास्त्रीयग्रन्थेभ्य-

स्त्रयाणां ग्रन्थानां छन्दोविवेचनं प्रस्तुतम्। अत्र सर्वप्रथमं निदानसूत्रे पतञ्जलिना १४४ छन्दांसि लक्षितानि। तदनन्तरम् ऋक्प्रातिशाख्ये शौनकेन ८३ छन्दांसि लक्षितानि। अध्यायान्ते ऋक्सर्वानुक्रमणी प्रस्तुता, यस्यां कात्यायनेन नव छन्दांसि स्वतन्त्ररूपेण लक्षितानि।

तृतीयेऽध्याये छन्दः सूत्रम्, उपनिदानसूत्रम्, अग्निपुराणं चेति त्रयश्छन्दोग्रन्थाः प्रस्तुताः। अत्र छन्दःसूत्रे पिङ्गलेन १३ वैदिकानि छन्दांसि स्वतन्त्ररूपेण लक्षितानि। उपनिदानसूत्रे महर्षिगार्ग्यस्य स्वतन्त्रलक्षिते २ द्वे छन्दसी प्राप्येते। तयोरेकं छन्दो विष्टारपङ्क्तिः (८+१२+८+१२) =४० वर्णात्मकं ताण्डिनो मन्यते। अध्यायान्तेऽग्निपुराणे स्वतन्त्रलक्षितानि चत्वारि ४ वैदिकच्छन्दांसि प्राप्यन्ते।

चतुर्थेऽध्याये जयदेवच्छन्दः, छन्दोऽनुक्रमणी, वृत्तमुक्तावलिश्चेति तिस्रश्छन्दोरचनाः प्रस्तूयन्ते। अत्र जयदेवच्छन्दसि जयदेवस्य स्वतन्त्रलक्षितानि १३ वैदिकच्छन्दांसि प्राप्यन्ते। छन्दोऽनुक्रमण्यां वेङ्कटमाधवेन गायत्रीतो जगतीपर्यन्तं ५८ छन्दोभेदा लक्षिताः, परं तेषु तस्य स्वतन्त्रलक्षित एकोऽपि छन्दोभेदो नास्ति। अध्यायान्ते वृत्तमुक्तावल्यां श्रीकृष्णभट्टस्य स्वतन्त्रलक्षितानि ४ चत्वारि वैदिकच्छन्दांसि सन्ति। अत्र छन्दोविवरणं यदि पाठकानां रुचिकरं स्यात्तदहं ग्रंथपरिश्रमं सफलं मंस्ये।

—राम किशोर मिश्रः।

# छान्दसग्रन्थपरम्परा

## अथ प्रथमोऽध्यायः

छन्दो वैदिकषडङ्गेषु गण्यते । यथा वेदस्याऽन्यान्यङ्गानि महत्त्वपूर्णानि सन्ति, तथैव छन्दोमहत्त्वमपि न कस्मादङ्गान्न्यूनम् । छन्दो वेदस्य पादौ कथ्येते[1] । पादार्थश्चरणो भवति । यथा पादरहितो जनो गन्तुमसमर्थो भवति, तथैव छन्दो विना वेदस्य गति र्नास्ति । अतो वेदाश्छन्दस्समाश्रिताः सन्ति । अतश्छन्दसामधिकं महत्त्वं वर्तते । यदानीं छन्दसां विकासोऽभवत्तदानीं छन्दो द्विधा भूतं वैदिकं लौकिकं चेति । तद् द्विधा भूतं छन्दः सुरक्षितुं छन्दोलक्षणकाराः आचार्यास्तन्नियमान् रचयितुं प्रारभन्त । छन्दोरचनाग्रन्थाश्छन्दोनियामकाश्छन्दःशास्त्रीयग्रन्थाः, छान्दसग्रन्था लाक्षणिकग्रन्था वा कथ्यन्ते ।

वेदेषु छन्दोरचनानन्तरं ब्राह्मणग्रन्थेषु छन्दसामुल्लेखात्परन्त्वाच्छांखायनश्रौतसूत्रे सर्वप्रथमं छन्दश्शास्त्रीयचर्चा प्राप्यते । अत्र गायत्री,उष्णिक्,अनुष्टुप्,बृहती, पङ्क्तिः, त्रिष्टुप् जगतीति सप्त छन्दांसि नाम्ना सङ्केतितानि सन्ति । छन्दोनामभ्यः पूर्वं त्रिपदा, पुरः, ककुप्, विराट्, सतः, निचृत्, भुरिगित्यादिभैदिकनामोल्लेखैः सह केषाञ्चिच्छन्दसां पादाः अक्षराश्चापि गण्यन्ते[2] । तदनन्तरं पातञ्जलनिदानसूत्रे शौनकीये ऋक्प्रातिशाख्ये कात्यायनकृतायाम् ऋक्सर्वानुक्रमण्यां च

---

१) "छन्दः पादौ तु वेदस्य ।" पाणिनीयशिक्षायां ४१ तमं पद्यम् ।

२) शांखायनश्रौतसूत्रम्— ६/४/५६, ७/२२/२५—२८, ७/२७/१२, ७/२७/३०, १६/२७/२, १६/२८/२, १६/२६/२ ।

छन्दांसि विचारितानि। कतिपयच्छन्दः- प्रवक्तृनामोल्लेखः पिङ्गलीये छन्दः सूत्रेऽपि लभ्यते, येषां नामानि सन्ति-ताण्डी, क्रौष्टुकिः, यास्कः, सैतवः, काश्यपः, शाकल्यः, रातः, माण्डव्यश्चेति,[3] किन्तु तेषां छन्दःशास्त्रीयग्रन्था न प्राप्यन्ते।

वैदिक युगारम्भाद्वैदिकयुगसमाप्तिपर्यन्तं प्रसिद्धिं गतानि छन्दांसि छन्दःप्रवक्तृभिराचार्यैस्तन्नियमैर्नियन्त्रितानि। अतश्छन्दोनियामका ग्रन्थाश्छन्दः-शास्त्रीय ग्रन्थाः कथिताः। प्राचीनसंस्कृतवाङ्मयेऽपि छन्दःशास्त्रस्याऽनेकानि नामानि प्राप्यन्ते, यथा छन्दोविचितिः, छन्दोनाम, छन्दोभाषा, छन्दोविजिनी, छन्दोविजितिः, छन्दोव्याख्यानं चेति[4]। अनेन ज्ञायते यच्छन्दोनियमादिप्रसारोऽभवत्, येन छन्दस्सम्बद्धामितस्ततो विकीर्णां सामग्रीमेकत्रीकृत्य पिङ्गलेन छन्दसूत्रं विरचितम्, यस्मिञ्छन्दसां साङ्गोपाङ्गवर्णनमस्ति।

छन्दःशास्त्रोद्भवकालोऽतिप्राचीनोऽस्ति। छन्दःशास्त्रं षट्सु वेदाङ्गेष्वन्यतमम्। अतोऽस्य शास्त्रस्य प्रादुर्भावकालोऽपि स एव, योऽन्येषां वेदाङ्गानामस्ति। वेदाङ्गप्रादुर्भावो न्यूनातिन्यूनैकादशसहस्रवर्षपूर्वं कृतयुगान्तेऽभवत्[5]। वेदाङ्गानामुल्लेखोऽपि प्राचीन ग्रन्थेषु प्राप्यते[6]। पाश्चा-

---

३) छन्दःसूत्रम्— ३/२९,३०,३४, ४/१८,७/९, ११,३३,३४
४) पाणिनीयगणपाठः— ४/३/७३, जैनेन्द्रगणपाठः-३/३/४७ जैनशाकटायनगणपाठः-३/१/१३६, चान्द्रगणपाठः-३/१/४५, गणरत्नमहोदधिः-५/३४४, सरस्वतीकण्ठाभरणम् ४/३
५) युधिष्ठिरमीमांसककृतवैदिकछन्दोमीमांसायाः पृष्ठः ४५।
६) बौधायनधर्मसूत्रम्- २/१४/२, वाल्मीकीयरामायणम्— १/७/१५। गौतमधर्मसूत्रम्- १५/२८, गोपथब्राह्मणम्- १/१/२७

त्यविद्वांसश्छन्दःशास्त्रप्रादुर्भावं सूत्रकालानन्तरमनेकशताब्दी-पर्यन्तं च तस्य विकासं मन्यन्ते। तेषां मतेन द्विशताधिके यीशपूर्वकाले पिङ्गलेन छन्दोनियामकं छन्दःसूत्रं प्रणीतम्। वस्तुतस्तु छन्दशास्त्रस्य प्रादुर्भावो न तु सूत्रकालानन्तरमभवत्, न च पिङ्गलीयं छन्दःसूत्रं छन्दः- शास्त्रस्याऽद्यग्रन्थः। पिङ्गलेन स्वग्रन्थेऽनेके छन्दप्रवक्तारः सम्मानमुल्लिखिताः।

निदानसूत्रे पतञ्जलिनापि सप्तानां छान्दसाचार्याणां मतानि 'पाञ्चालाः, एके, उदाहरन्ति, बह्वृचाः, आचक्षते, ब्रुवते, प्रतिजानते' इति साङ्केतिकपदैरुद्धृतानि[8]। छन्दःसूत्रेऽष्टाऽऽचार्या निर्दिष्टाः। उपनिदानसूत्रे सप्ताचार्याः सङ्केतिताः सन्ति, यथा ज्योतिष्मतीति पाञ्चालाः; उरोबृहतीति यास्कः, महाबृहतीत्येके, द्विपदा विस्तारपंक्तिश्च ताण्डिनः। यथा- ब्राह्मणात्ताण्डिनश्चैव पिङ्गलाच्च महात्मनः।[9]

निदानादुक्थशास्त्राच्च छन्दसां ज्ञानमुद्धृतम्॥

छन्दोऽनुशासने जयकीर्तिना दशप्राचीनाचार्याणां यतिविषयकं स्मरणं कृतम्—

वाञ्छन्ति यतिं पिङ्गल-वसिष्ठ-कौडिन्य-कपिल-कम्बलमुनयः
नेच्छन्ति भरत-कोहल-माण्डव्या-ऽश्वतर-सैतवाद्याः केचित्॥

हेमचन्द्रेण स्वग्रन्थे छन्दोऽनुशासनेऽप्यहीन्द्र-सैतव-भरत काश्यप-पिङ्गल-जयदेव-स्वयम्भूरिति सप्तपूर्वाचार्याणां नामानि गृहीतानि, 'केचित्, कश्चित्, अन्यः, अन्ये, अपरे, एके

---

7) **Ancient India and Indian Civilisation, London, 1951, P. 263.**

८) निदानसूत्रस्य पृष्ठाः- १, २, ३, ४, ५, ६, ७।

९) उपनिदानसूत्रम्—८/१

पूर्वाचार्याः, मागधाः, अम्नायः, यदाह, यदाहुः, वृद्धाः, इत्यग्र-हश्लोकाः, यत्युपदेशोपनिषच्चेति साङ्केतिकैः पदैश्चतुर्दशाना-माचार्याणां मतानि प्रकाशितानि। छन्दःसूत्रस्य भाष्यरचयिता यादवप्रकाशो भाष्यान्ते छन्दःशास्त्रपरम्पराप्रदर्शकं पद्यमुद-लिखत्—

छन्दोज्ञानमिदं भवाद् भगवतो लेभे सुराणां गुरुः।
तस्माद् दुश्च्यवनस्ततः सुरगुरुर्माण्डव्यनामा ततः॥
माण्डव्यादपि सैतवस्तत ऋषिर्यास्कस्ततः पिङ्गलः।
तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः क्रमात्॥

छन्दोमञ्जर्यां गङ्गादासेन यतिविरोधे श्वेतमाण्डव्यादि मतप्रकाशनानन्तरं यतिसमर्थने स्वगुरुः पुरुषोत्तमभट्टः[10] स्मृतः राजवार्तिककारस्त्वेकमन्यं छन्दःशास्त्रपरम्परसूचकमुल्लेख-मकरोत्—

शिव-गिरिजा-नन्दि-फणीन्द्र-बृहस्पति-च्यवन-शुक्र-माण्डव्याः।
सैतव-पिङ्गल-गरुडप्रमुखा आद्या जयन्ति गुरुचरणाः॥

चन्द्रशेखरभट्टेन वृत्तमौक्तिके स्वग्रन्थरचनाऽऽधारे चतु-र्णामाचार्याणां यतिनिरूपणे चाऽष्टानामाचार्याणां नामोल्लेखः कृतः[11]। यादवप्रकाशकृते छन्दःसूत्रभाष्यान्तेऽपरमेकं छन्दःशा-स्त्रपरम्परादर्शकं पद्यं प्राप्यते—

छन्दःशास्त्रमिदं पुरा त्रिनयनाल्लेभे गुरोरादितः।
तस्मात्प्राप सनत्कुमारमुनिभिस्तेभ्यः सुराणां गुरुः।
तस्माद्देवपतिस्ततः फणपतिस्तस्माच्च सत्पिङ्गलः।
तच्छिष्यैर्बहुभिर्महात्मभिरथो मह्यां प्रतिष्ठापितम्॥

---

१०) छन्दोमञ्जरी—१/१४

११) 'रविकर-पशुपति-पिङ्गल-शम्भुग्रन्थान् विलोक्य-बनिर्ब-न्धान्।' वृत्तमौक्तिकम् पृष्ठः-२७३

श्रीयुधिष्ठिरमीमांसकेन ग्रन्थनिर्देशानुसारेण छन्दोमर्मज्ञाद् भगवतः शिवादाचार्यगार्ग्यपर्यन्तं छन्दःप्रवक्तृनामपौर्वापर्यक्रमश्चतुर्युगेषु विभाजितः। यथा—

| कृतयुगे | त्रेतायाम् | द्वापरे | कलियुगारम्भे |
|---|---|---|---|
| १. शिवः | १०. माण्डव्य | १५. यास्कः | २५. उक्थशास्त्रकारः |
| २. पार्वती | ११. वसिष्ठः | १६. सातः | २६. शौनकः |
| ३. नन्दी | १२. सैतबः | १७. क्रौष्टुकिः | २७. पिङ्गलः |
| ४. गुहः | १३. भरतः | १८. कौडिन्यः | २८. कात्यायनः |
| ५. सनत्कुमाराः | १४. कोहलः | १९. ताण्डी | २९. गरुड़ः |
| ६. बृहस्पतिः | | २०. अश्वतरः | ३०. गार्ग्यः |
| ७. इन्द्रः | | २१. कम्बलः | |
| ८. शुक्रः | | २२. काश्यपः | |
| ९. कपिलः | | २३. पाञ्चालः (बाभ्रव्यः) | |
| | | २४. पतञ्जलिः | |

नन्दी शिवभक्त आचार्य आसीत्। अयं पार्वती शिष्यः[12] कामसूत्रस्य चाऽऽचार्योऽभवत्[13]। आचार्य शौनकेन स्वग्रन्थे ऋक्प्रातिशाख्ये छान्दसाचार्यरूपेण यास्कः समुल्लिखितः[14]। पिङ्गलात्पूर्वं छन्दःशास्त्रविषयकः कोऽपि स्वतन्त्रग्रन्थस्तु नैव प्राप्यते, किन्तु तस्मात्पूर्वं यैश्चतुर्भिराचार्यैः स्वस्वग्रन्थेषु छन्दांसि विचारितानि, ते सन्ति भरतः पतञ्जलिः शौनकः कात्यायनश्च। पिङ्गलेन छन्दः सूत्रे येषामष्टा-

---

१२) वृत्तमौक्तिकभूमिका, पृष्ठः-९

१३) वात्सायनकृतकामसूत्रम्- १/१/८

१४) 'न दाशतय्येकपदा काचिदस्तीति वै यास्कः।' ऋक्प्रातिशाख्यम्- १७/२५

नामाचार्याणामुल्लेखः कृतस्तेषां छन्दोग्रन्थास्तु न प्राप्यन्ते, किन्तु छन्दोविषयकमतानि सन्ति, येषामाधारेण तत्कृतविशिष्टछन्दोनामकरणसङ्केतो लभ्यते । यथा—

१- माण्डव्यकृतछन्दोनाम—चण्डवृष्टिप्रपातः (दण्डकः), छन्दः सूत्रम्- ७/३६

२- सैतवकृतछन्दोनाम—विपुलाऽनुष्टुप्, उद्धर्षिणी च, छन्दः सूत्रम्- ५/१८, ७/१

३- यास्ककृतछन्दोनाम—उरोबृहती (न्यंकुसारिणी), छन्दः सूत्रम्- ३/३०

४- रातकृतछन्दोनाम—चण्डवृष्टिप्रपातः (दण्डकः), छन्दः सूत्रम्- ७/३६

५- क्रौष्टुकिकृतछन्दोनाम—स्कन्धोग्रीवी (न्यंकुसारिणी) छन्दः सूत्रम्-३/२९

६- ताण्डिकृतछन्दोनाम—सतोबृहती (महाबृहती), छन्दः सूत्रम्- ३/३६

७- काश्यपकृतछन्दोनाम—सिंहोन्नता (वसन्ततिलका), छन्दः सूत्रम्- ७/९

८- शाकल्यकृतछन्दोनाम—मधुमाधवी (वसन्ततिलका), छन्दः सूत्रम्- ७/११

अत्र चण्डवृष्टिप्रपातो नाम दण्डको माण्डव्यस्य, न तु रातस्य । माण्डव्योऽस्ति रातात्प्राचीनः । यास्ककृतोरोबृहतीछन्दसो नामान्तरमस्ति स्कन्धोग्रीवीति । अतः स्कन्धोग्रीवीति क्रौष्टुकिकृतं छन्दोनास्ति, तच्छन्दस्तु यास्कस्य । यास्कोऽस्ति क्रौष्टुकेः प्राचीनः ।

इत्थमेव मधुमाधवीति काश्यपस्य सिंहोन्नता नाम छन्दः, शाकल्येन तु तन्नामान्तरं कृतम् । पिङ्गलेनोरोबृहतीछन्दसो

न्यंकुसारिणीति, सतोबृहतीच्छन्दसो महाबृहतीति, सिंहोन्नतायाश्च वसन्ततिलकेति नामान्तरं कृतम् ।

द्विधाभूतं छन्दो वैदिकं लौकिकं च, यस्य विवरणं चतुर्विधग्रन्थेषु प्राप्यते । तेष्वेके ते ग्रन्था: सन्ति, येऽन्यविषयैः सह छन्दोविषयकविवेचनमपि प्रस्तुवन्ति । एषु ग्रन्थेषु नाट्यशास्त्रम, निदानसूत्रम्, ऋक्प्रातिशाख्यम्, अग्निपुराणं च मुख्यमस्ति ।

अन्ये ते ग्रन्थाः सन्ति, येऽनुक्रमणीसाहित्यान्तर्गताः वर्तन्ते । एषु शौनककृता छन्दोऽनुक्रमणी, कात्यायनकृता ऋक्सर्वानुक्रमणी, शुक्लयजुः सर्वानुक्रमसूत्रम्, बृहत्सर्वानुक्रमणी, माधवभट्टकृता ऋग्वेदानुक्रमणी, वेङ्कटमाधवकृता छन्दोऽनुक्रमणी च प्रमुखाः सन्ति, किन्तु कात्यायनकृतायामृक्सर्वानुक्रमण्यां वेङ्कटमाधवकृतायां च छन्दोऽनुमण्यामेव छन्दोलक्षणानि प्राप्यन्ते । अन्येष्वनुक्रमणीग्रण्थेषु केवलं छन्दोविवरणमेव लभ्यते ।

अपरे ते ग्रन्थाः सन्ति, ये छन्दःशास्त्रमवलम्ब्य सर्वविधविचारपूर्वकं लक्षणोदाहरणसहिता विरचिताश्छान्दसग्रन्थाः सन्ति । येषु पिङ्गलकृतच्छन्दःसूत्रादारभ्य रामकिशोरमिश्रकृतच्छन्दस्कलावतीपर्यन्तं सप्तविंशतिश्छन्दोग्रन्था विद्यन्ते यत्र छन्दांसि लक्षितानि यत्र तत्र चोदाहृतानि सन्ति । इमे लक्षणग्रन्थाः संस्कृते प्राकृते च लिखिताः सन्ति । प्राकृते लिखितास्ते छन्दोलक्षणग्रन्था अत्र सङ्गृहीताः, येषु संस्कृतच्छन्दोलक्षणानि प्राप्यन्ते । इमे छान्दसग्रन्था एव सर्वप्रधानाः सन्ति, ये छन्दःशास्त्रीयरचनाः कथ्यन्ते ।

इतरे ते ग्रन्थाः सन्ति, ये छन्दोग्रन्थटीकारूपा वर्तन्ते । यद्यपि छन्दष्टीकाग्रन्था बहवः सन्ति, तथापि ते टीकाग्रन्था

अत्र सङ्गृहीताः सन्ति, येषु कानिचिन्नवीनानि छन्दांसि स्वतन्त्ररूपेण लक्षितानि विद्यन्तेयेन छन्दोलक्षणकाराणां छन्दः शास्त्रप्रक्रियायां योगदानस्य मूल्याङ्कनं कर्तुमत्र शक्नुयाम्। अतो यासु रचनासु संस्कृतछन्दोलक्षणानि प्राप्यन्ते, तासां रचनानामत्र छान्दसग्रन्थपरम्परारूप इतिहासो लिख्यते। छन्दः शास्त्रग्रन्थानामत्र विवरणं प्रस्तूयते—

(ग्रन्थानां कालक्रमो ग्रन्थविवरणे प्रदत्तो यथास्थानम्)

**१) वैदिकाश्छन्दःशास्त्रीयग्रन्थाः**

१- निदानसूत्रम्
२- ऋक्प्रातिशाख्यम्
३- ऋक्सर्वानुक्रमणी
४- छन्दः सूत्रम्
५- उपनिदानसूत्रम्
६- अग्निपुराणम्
७- जयदेवच्छन्दः
८- छन्दोऽनुक्रमणी
९- वृत्त .क्तावलिः
९- छन्दोऽनुशासनम् (जयकीर्तिकृतम्)
१०- वृत्तजातिसमुच्चयः
११- छन्दः शेखरः
१२- सुवृत्ततिलकम्
१३- वृत्तरत्नाकरः
१४- रत्नमञ्जूषा
१५- छन्दोऽनुशासम् (हेमचन्द्रकृतम्)

**२) लौकिकाश्छन्दःशास्त्रीयग्रन्थाः**

१- नाटयशास्त्रम्
२- छन्ः:सूत्रम्
३- अग्निपुराणम
४- श्रुतबोधः
५- छन्दोविचितिः
६- जयदेवच्छन्दः
७- स्वयम्भूच्छन्दः
८- गाथालक्षणम
१६- कविदर्पणम्
१७- प्राकृतपैङ्गलम्
१८- छन्दःकोशः
१९- वाणीभूषणम्
२०- छन्दोमञ्जरी
२१- वृत्तरत्नावलिः

२२- वृत्तमौक्तिकम् श्री चन्द्रशेखरभट्टकृतम् ।
२३- वृत्तमुक्तावलिः श्री कृष्णभट्टकृता ।
२४- छन्दःकौस्तुभः श्री राधादामोदरकृतः ।
२५- वाग्वल्लभः श्री दुःखभञ्जनकृतः ।
२६- छन्दःसन्दोहः श्री दिनेशचन्द्रदत्तकृतः ।
२७- छन्दस्कलावती श्री रामकिशोरमिश्रकृता ।

## ३) छन्दःशास्त्रीयटीकाग्रन्थाः

१- बृहत्संहितावृत्तिः श्री भट्टोत्पलभट्टकृता
२- वृत्तरत्नाकरवृत्तिः
सुकविहृदयानन्दिनी श्री सुल्हणकृता ।
३- अजितशान्तिस्तवटीका श्री जिनप्रभकृता ।
४- वृत्तरत्नाकरटीका श्री रामचन्द्रविबुधकृता ।
५- वृत्तरत्नाकरटीका श्री समय सुन्दरकृता ।
६- वृत्तरत्नाकरसेतुः श्री भास्करकृतः ।
७- वृत्तरत्नाकरनारायणी श्री नारायणकृता ।
८- वृत्तरत्नाकरभावार्थदीपिका श्री जनार्दनकृता ।
९- वाग्वल्लभवरवर्णिनी श्री देवीप्रसादशर्मकृता ।

एते सर्वे छन्दोलक्षणोदाहरणग्रन्था बाणयुगाङ्किताः = ४५ विद्यन्ते ।

इति प्रथमोऽध्यायः ।

# अथ द्वितीयोऽध्यायः

## वैदिकच्छन्दःशास्त्रीयरचनाः

## १) निदानसूत्रम्

निदानसूत्रस्य रचयिता महर्षिः पतञ्जलिरस्ति । श्री युधिष्ठिरमीमांसकमतानुसारेणाऽयमाचार्यःशौनकात्पूर्वं बभूव[1], यो द्वापरकालीनश्छन्दःप्रवक्ताऽऽसीत् । अस्य ग्रन्थे निदान-सूत्रे दश प्रपाठकाः सन्ति, प्रतिप्रपाठकं च त्रयोदश खण्डानि विद्यन्ते । प्रथमप्रपाठकस्य प्रथमसप्तखण्डेषु छन्दोविषयकवर्ण-नं प्राप्यते, येषां प्रथमेषु षट्सु खण्डेषु छन्दोलक्षणानि सन्ति सप्तमे च खण्डे यतिविषयकवर्णनमस्ति । ग्रन्थस्य छन्दोविष-यकभागे श्रीतातप्रसादविरचिता तत्त्वसुबोधिनी नामवृत्तिः प्राप्यते । शेषः समस्तो ग्रन्थो यतिवर्णनं प्रस्तौति । अत्र निम्नाङ्कितानि वैदिकानि छन्दांसि लक्षितानि सन्ति ।

### (१) प्रथमसप्तके पतञ्जलिना लक्षितानि सप्त छन्दांसि—

१) १- एकपाद गायत्री (८) वर्णाः ।
२ द्विपदा गायत्री (८+८)=१६ वर्णाः ।
३- गायत्री (८+८+८)=२४ वर्णाः ।

---

१) वैदिकच्छन्दोमीमांसा, पृष्ठः-५९

२) के०एन० भटनागरसम्पादिते निदानसूत्रे १८९ पृष्ठानन्तरं १-२७ पृष्ठमध्ये वृत्तिः प्रकाशिता विद्यते ।

४- चतुष्पादगायत्री (६+६+६+६)=२४ वर्णाः ।

२)५- उष्णिक् (८+८+१२=२८ वर्णाः ।

६- ककुबुष्णिक् (८+१२+८)=२८ वर्णाः ।

७- पुरउष्णिक् (१२+८+८)=२८ वर्णाः ।

८- चतुष्पादुष्णिक् (७+७+७+७)=२८ वर्णाः ।

३)९- अनुष्टुप् (८+८+८+८)=३२ वर्णाः

१०- पिपीलिकामध्यानुष्टुप्(१२+८+१२)=३२ वर्णाः

११- पुरस्ताज्ज्योतिरनुष्टुप्(८+१२+१२)=३२ वर्णाः

१२- उपरिष्टाज्ज्योतिरनुष्टुप् (१२+१२+८) =३२ वर्णाः ।

४)१३- बृहती (९+९+९+९)=३६ वर्णाः ।

१४- पथ्याबृहती (८+८+१२+८)=३६ वर्णाः ।

१५- पुरस्ताद् बृहती (१२+८+८+८)=३६ वर्णाः ।

१६- उपरिष्टाद्बृहती (८+८+८+१२)=३६ वर्णाः ।

५)१७- पङ्क्तिः (८+८+८+८+८)=४० वर्णाः ।

१८- सिद्धाविष्टारपङ्क्तिः (१२+८+१२+८)=४० वर्णाः ।

१९- विपरीतापङ्क्तिः(८+१२+८+१२)=४०वर्णाः

२०- आस्तारपङ्क्तिः८+८+१२+१२)=४०वर्णाः ।

२१- प्रस्तारपङ्क्तिः १२+१२+८+८)=४० वर्णाः ।

२२- संस्तारपङ्क्तिः १२+८+८+१२)=४० वर्णाः ।

२३- विष्टारपङ्क्तिः(८+१२+१२+८)=४०वर्णाः ।

२४- अक्षरपङ्क्तिः (५+५+५+५)=२० वर्णाः ।

२५- द्विपदाक्षरपङ्क्तिः (१०+१०)=२० वर्णाः ।

२६- एकपदाविराट्पङ्क्तिः (१०)=१० वर्णाः ।
२७- पदपङ्क्तिः (५+५+५+५+५)= २५ वर्णाः ।
२८- द्विपदापङ्क्तिः (१२+८)=२० वर्णाः ।
६)२९- त्रिष्टुप् (११+११+११+११)=४४ वर्णाः ।
३०- ज्योतिष्मती त्रिष्टुप् (११+११+११+८)=४१ वर्णाः ।
३१- पञ्चपदा त्रिष्टुप् (८+८+८+८+१२)=४४ वर्णाः ।
३२- द्विपदा त्रिष्टुप् (११+११)=२२ वर्णाः ।
३३- त्रिपदा त्रिष्टुप् (११+११+११)= ३३ वर्णाः (विराड् वा कथ्यते) ।
३४- एकपदा त्रिष्टुप् (११)= ११ वर्णाः ।
७)३५- जगती (१२+१२+१२+१२)=४८ वर्णाः ।
३६- एकपदा जगती (१२)= १२ वर्णाः ।
३७- द्विपदा जगती (१२+१२)= २४ वर्णाः ।
३८- पञ्चपदा जगती (८+८+८+१२+१२)= ४८ वर्णाः ।
४०- विष्टारपंक्तिजगती (प्रवद्धपदा)= (६+६+६+६+६+६+६+६)= ४८ वर्णाः ।
४१- विषमपाद जगती (९+१४+११+१३)= ४७ वर्णाः ।
४२- ज्योतिष्मतीजगती (१२+१२+१२+८)= ४४ वर्णाः ।
४३- विषमपदा जगती(६+१०+११+८)=३५ वर्णाः

इति प्रथमसप्तकच्छन्दांसि ।

# पतञ्जलिना लक्षितानि छन्दांसि

## (२) द्वितीयसप्तकेऽतिच्छन्दांसि सप्त–

१- विधृतिः (५२ वर्णाः)। २- शक्वरी (५६ वर्णाः)। ३- अष्टिः (६० वर्णाः)। ४- अत्यष्टिः (६४ वर्णाः)। ५- मंहना (६८ वर्णाः)। ६- सरित् (७२ वर्णाः)। ७- सम्पा (७६ वर्णाः)।

## (३) तृतीयसप्तके सप्ताऽतिच्छन्दांसि–

१- सिन्धुः (८०) २- सलिलम् (८४) ३- अम्भः (८८) ४- गगनम् (९२) ५- अर्णवः (९६) ६- आपः (१००) ७- समुद्रः (१०४ वर्णाः)।

## अन्तःस्थानि छन्दांसि (प्राग्गायत्रीपञ्चकम्)

१- कृतिः (४ वर्णाः)। २- प्रकृतिः (८ वर्णाः)। ३- संकृतिः (१२ वर्णाः)। ४- अभिकृतिः (१६ वर्णाः)। ५- आकृतिः (२० वर्णाः)।

## द्वापरच्छन्दस्सु प्रथमसप्तकम्

१- राट् (२२ वर्णाः)।२- सम्राट् (२६)।३- विराट् (३०) ४- स्वराट् (३४)। ५- स्ववशिनी (३८)। ६- परमेष्ठा (४२)। ७- अन्तस्स्था (४६ वर्णाः)।

## द्वापरच्छन्दस्सु द्वितीयसप्तकम्

१- प्रत्नः (५० वर्णाः)। २- अमृतम् (५४)। ३- वृषा (५८) ४- जीवः (६२)। ५- तृप्तः (६६)। ६- रसः (७०)। ७- शुक्रः (७४ वर्णाः)।

## द्वापरच्छन्दस्सु तृतीयसप्तकम्

१- अर्णः (७८ वर्णाः) । २- अंशः (८२) । ३- अम्भः (८६)
४- अम्बु (९०) । ५- वारि (९४) । ६- आपः (९८) ।
७- उदकम् (१०२ वर्णाः) ।

## द्वापरच्छन्दस्सु प्राग्गायत्रीपञ्चकम् (द्व्यक्षरन्यूनम्)

१- हर्षीका (२ वर्णौ) । २- सर्षीका (६ वर्णाः) ३- मर्षीका (१० वर्णाः) । ४- सर्वमात्रा (१४ वर्णाः) ।
५- विराट्कामा (१८ वर्णाः) ।

## दैवाऽऽसुरप्राजापत्याऽऽर्षपूर्वाणि प्रथमसप्तकच्छन्दांसि

१] १- दैवीगायत्री (१) २- आसुरी गायत्री (१५) ३- प्राजापत्यागायत्री (८) ४- आर्षीगायत्री (२४) ।

२] १- दैव्युष्णिक् (२ वर्णौ) २- आसुर्युष्णिक् (१४ वर्णाः)
३- प्राजापत्योष्णिक् (१२ वर्णाः) ।
४- आर्ष्युष्णिक् [२८ वर्णाः] ।

३) **अनुष्टुप्–** १- दैव्यनुष्टुप् (३ वर्णाः) । २- आसुर्यनुष्टुप् (१३ वर्णाः) । ३- प्राजापत्यानुष्टुप् (१६ वर्णाः)
४- आर्ष्यनुष्टुप् (३२ वर्णाः) ।

४) **बृहती–** १- दैवीबहती (४ वर्णाः) । २- आसुरी बृहती (१२ वर्णाः) ।३- प्राजापत्या बृहती(२० वर्णाः)
४- आर्षीबृहती (३६ वर्णाः) ।

५) **पङ्क्तिः–** १- दैवीपङ्क्तिः (५ वर्णाः) । २- आसुरी पङ्क्तिः (११ वर्णाः) । ३- प्राजापत्या पङ्क्तिः (२४ वर्णाः) ४- आर्षी पङ्क्तिः (४० वर्णाः) ।

६) **त्रिष्टुप्–** १- दैवीत्रिष्टुप् (६ वर्णाः)। २- आसुरी त्रिष्टुप् (१० वर्णाः)। ३- प्राजापत्या त्रिष्टुप् (२८ वर्णाः)। ४- आर्षी त्रिष्टुप् (४४ वर्णाः)।

७) **जगती**- १- दैवी जगती (७ वर्णाः)। २- आसुरी जगती (६ वर्णाः)। ३- प्राजापत्या जगती (३२ वर्णाः ४- आर्षी जगती (४८ वर्णाः)।

## दैवाऽऽसुरप्राजापत्याऽऽर्षपूर्वाणि द्वितीयसप्तकच्छन्दांसि

१) **विधृतिः–** १- दैवी विधृतिः (८ वर्णाः)। २- आसुरी विधृतिः (८ वर्णाः)। ३- प्राजापत्या विधृतिः (३६ वर्णाः)। ४- आर्षी विधृतिः (५२ वर्णाः)।

२) **शक्वरी–** १- दैवी शक्वरी (६ वर्णाः)। २- आसुरी शक्वरी (७ वर्णाः)। ३- प्राजापत्या शक्वरी (४० वर्णाः)। ४- आर्षी शक्वरी (५६ वर्णाः)।

३) **अष्टिः–** १- दैव्यष्टिः (१० वर्णाः)। २- आसुर्यष्टिः (६ वर्णाः)। ३- प्राजापत्याष्टिः (४४ वर्णाः)। ४- आर्ष्यष्टिः (६० वर्णाः)।

४) **अत्यष्टिः–** १- दैव्यत्यष्टिः (११ वर्णाः)। २- आसुर्यत्यष्टिः (५ वर्णाः)। ३- प्राजापत्यात्यष्टिः (४८ वर्णाः) ४- आर्ष्यत्यष्टिः (६४ वर्णाः)।

५) **मंहना–** १- दैवी मंहना (१२ वर्णाः)। २- आसुरी मंहना (४ वर्णाः)। ३- प्राजापत्या मंहना (५२ वर्णाः ४- आर्षी मंहना (६८ वर्णाः)।

६) **सरित्–** १- दैवी सरित् (१३ वर्णाः)। २- आसुरी सरित् (३ वर्णाः)। ३- प्राजापत्या सरित् (५६ वर्णाः ४- आर्षी सरित् (७२ वर्णाः)।

७) **सम्पा–** १- दैवी सम्पा (१४ वर्णाः)। २- आसुरी सम्पा (२ वर्णौ)। ३- प्राजापत्या सम्पा (६० वर्णाः) ४- आर्षी सम्पा (७६ वर्णाः)।

**छन्दोयोगः– १४४**

पतञ्जलिना गायत्र्यादीनि छन्दांसि कृतानि कथ्यन्ते, तेष्वेकाक्षरन्यूनानि छन्दांसि त्रेतानामकानि, द्व्यक्षरन्यूनानि द्वापरनामकानि, त्र्यक्षरन्यूनानि च कलिसंज्ञकानि व्यवहृतानि दैवपूर्वाणि गायत्रीतः सम्पापर्यन्तं छन्दांसि त्वेकवर्णतश्चतुर्दशवर्णपर्यन्तानि भवन्ति। आसुरच्छन्दांसि गायत्रीतः सम्पापर्यन्तं पञ्चदशवर्णतो वर्णद्वयपर्यन्तानि सन्ति। प्राजापत्यानि छन्दांसि गायत्रीतः सम्पार्यन्तमष्टवर्णतः षष्टिवर्णपर्यन्तं वर्धन्ते चतुर्भिश्चतुर्भिरक्षरैः। इत्थमार्षाणि छन्दांस्यपि गायत्रीतः सम्पापर्यन्तं चतुर्विशतिवर्णतः षट्सप्ततिवर्णपर्यन्तं चतुरक्षरैर्वृद्धि प्राप्नुवन्ति। एवमत्र निदानसूत्रे १४४ चतुश्चत्वारिंशदधिकशतसंख्यकानि छन्दांसि पतञ्जलिना लक्षितानि सन्ति।

## २) ऋक्प्रातिशाख्यम्

ऋक्प्रातिशाख्यस्य प्रातिशाख्यग्रन्थेषु प्राचीनतया-प्रामाणिकतया च महत्त्वपूर्णस्थानमस्ति। ग्रन्थस्याऽस्य नामान्तरं पार्षदसूत्रमपि। टीकाकारो विष्णुमित्रोऽस्य पार्षदस्य

रचयितारं शौनकं कथयति[3]। पार्षदरचयिताऽऽश्वलायनगुरु-र्महर्षिशौनकोऽस्ति[4]। शौनकीया रचना यास्ककात्यायनमध्य कालीना मन्यन्ते। अस्य रचनासु[5]बृहद्देवता महत्त्वपूर्णकृतिः। कृतिरियं यास्ककृतनिरुक्तस्य कात्यायनकृताया ऋक्सर्वानु-क्रमण्या मध्यकाले कृता रचना। शौनकेनाऽत्र बृहद्देवतायां निरुक्तस्याऽनेकवाक्यानि समुद्धतानि, कात्यायनेन च बृहद्देवतायाः प्रायस्त्रिंशत्संख्यकाः श्लोकाः अल्पपरिव-तनसहिता ऋक्सर्वानुक्रमण्यामुद्धताः। अत आचार्यशौनकः कात्यायनात्पूर्ववर्ती यास्काच्च परवर्ती सिद्ध्यते।

ऋक्प्रातिशाख्ये ऋग्वेदस्य प्राप्तशाकलशाखायाः उप-शाखाशैशिरीयायाः साङ्गोपाङ्गवर्णनमस्ति। इदमैतरेयार-ण्यकस्य संहितोपनिषदं (तृतीयमारण्यकं) अक्षरशोऽनुसरति। अत्राऽऽरण्यकेनिर्दिष्टानां माण्डूकेय-माक्षव्याऽऽगस्त्यशूरवीर-नामकानामाचार्याणां संहिताविषयकमतानां प्रतिपादनम-स्ति। शिक्षायाश्छन्दसो व्याकरणस्य च नियमानां सविवेचनं

(३) "शौनकं च विशेषेण येनेदं पार्षदं कृतम्।" वर्गद्वयवृ-त्तिः-५। इयंवृत्तिः ऋक्प्रातिशाख्ये ऋज्वर्थानाम्ना पुण्य-नगरे डेक्कनमहाविद्यालये पुस्तकालये हस्तलिखिता प्राप्यते। अत्र शकसंवत् १५६२ अङ्कितोऽस्ति।

(४) बलदेव उपाध्याय— वैदिक साहित्य और संस्कृति, पृष्ठ ३७८।

(५) ए० ए० मेक्डानल— बृहद्देवता, **Introduction, Pages 22**।

वर्णनं प्रत्येकप्रातिशाख्यस्य प्रयोजनम्[6]। अस्मिन् १८ अष्टादश पटलाः सन्ति, येषु स्वराणां वर्णानां सन्धीनां छन्दसां च मार्मिकं वर्णनं प्राप्यते। अस्यग्रन्थस्याऽन्तिमेषु त्रिषु (१६-१७-१८) पटलेषु येषामष्टाशीत्यधिकशतसंख्यकानां १८८ छन्दसां लक्षणानि प्राप्यन्ते, तेषु महर्षिशौनकस्य स्वतन्त्ररूपेण लक्षितानि चतुःषष्टिश्छन्दांसि सन्ति। अन्यानि छन्दांसि पतञ्जलिना पूर्वमेव लक्षितानि, परमत्र शौनकेन तेषु केषाञ्चिच्छन्दसां नामान्यपि परिवर्तितानि।

## शौनकस्य स्वतन्त्रलक्षितानि छन्दांसि

आचार्यशौनकेन गायत्र्यादिप्रथमसप्तके याजुषसामाऽऽर्चब्राह्मपूर्वाणि गायत्र्यादीनि सप्त छन्दांसि स्वीकृतानि। एषु छन्दस्सु गायत्रीतो जगतीपर्यन्तं षडक्षरतो द्वादशाक्षरपर्यन्तमेकैकाक्षरवृद्धिर्भवति याजुषपूर्वेषु छन्दस्सु। सामपूर्वेषु छन्दस्सु गायत्रीतो जगतीपर्यन्तं द्वादशवर्णतश्चतुर्विंशतिवर्णपर्यन्तं द्वौ द्वौ वर्धेते। आर्चपूर्वेषु छन्दस्सु गायत्रीतो जगतीपर्यन्तमष्टादशवर्णतः षट्त्रिंशद्वर्णपर्यन्तं त्रयस्त्रयो वर्णा वर्धन्ते। इत्थमेव ब्राह्मपूर्वेषु छन्दस्सु गायत्रीतो जगतीपर्यन्तं षट्त्रिंशद्वर्णतो द्विसप्ततिवर्णपर्यन्तं षण्णां षण्णामक्षराणां वृद्धिर्भवति[7]। यथा—

---

(६) शिक्षाछन्दोव्याकरणैः सामान्येनोक्तलक्षणम्।
तदेवमिह शाखायामिति शास्त्रप्रयोजनम्॥'
उव्वटकृतप्रातिशाख्यभाष्ये प्रारम्भिकपद्यम्।

(७) शौनककृतम् ऋक्प्रातिशाख्यम्—१६/१-६

**छन्दोनाम** **वर्णाः**

**१- गायत्री–** १- याजुषी गायत्री (६) २- साम्नी गायत्री (१२) ३- आर्ची गायत्री (१८) वर्णाः। ४- ब्राह्मी गायत्री (३६ वर्णाः)।

**२- उष्णिक्–** ५- याजुष्णुष्णिक् (७)। ६- साम्न्युष्णिक् (१४ वर्णाः)। ७- आर्च्युष्णिक् (२१ वर्णाः)। ८- ब्राह्म्युष्णिक् (४२ वर्णाः)।

**३- अनुष्टुप्–** ९- याजुष्यनुष्टुप् (८ वर्णाः)। १०- साम्न्यनुष्टुप् (१६ वर्णाः)। ११- आर्च्यनुष्टुप् (२४ वर्णाः)। १२- ब्राह्म्यनुष्टुप् (४८ वर्णाः)।

**४- बृहती–** १३- याजुषी बृहती (९ वर्णाः)। १४- साम्नी बृहती (१८ वर्णाः)। १५- आर्ची बृहती (२७ वर्णाः)। १६- ब्राह्मी बृहती (५४ वर्णाः)।

**५- पंक्तिः–** १७- याजुषी पङ्क्तिः (१० वर्णाः)। १८- साम्नी पङ्क्तिः (२० वर्णाः)। १९- आर्ची पङ्क्तिः (३० वर्णाः) २०- ब्राह्मी पङ्क्तिः (६० वर्णाः)।

**६- त्रिष्टुप्–** २१- याजुषी त्रिष्टुप् (११ वर्णाः)। २२- साम्नी त्रिष्टुप् (२२ वर्णाः)। २३- आर्ची त्रिष्टुप् (३३ वर्णाः)। २४- ब्राह्मी त्रिष्टुप् (६६ वर्णाः)।

**७- जगती**— २५- याजुषी जगती (१२ वर्णाः)। २६- साम्नी जगती (२४ वर्णाः)। २७- आर्ची जगती (३६ वर्णाः) २८- ब्राह्मी जगती (७२ वर्णाः)।

# गायत्र्यादिप्रथमसप्तके शौनकस्य स्वतन्त्रलक्षितानि छन्दांसि

**गायत्री** **पादवर्णाः**

१- अतिनिचृद् गायत्री (६+६+७)=१९ वर्णाः ।
२- अतिनिचृद् गायत्री (७+६+७)=२० वर्णाः ।
३- पादनिचृद् गायत्री (७+७+७)=२१ वर्णाः ।
४- पादनिचृद् वर्धमाना गायत्री (६+७+८)=२१ वर्णाः ।
५- वर्धमाना गायत्री (८+६+८)=२२ वर्णाः ।
६- द्विपदा गायत्री (१२+१२)=२४ वर्णाः ।
७- यवमध्या गायत्री (७+१०+७)=२४ वर्णाः ।
८- उष्णिग्गर्भा गायत्री (६+७+११)=२४ वर्णाः ।
९- पदपङ्क्तिगायत्री (४+६+५+५+५)=२५ वर्णाः ।
१०- भुरिग्गायत्री (८+१०+७)=२५ वर्णाः ।
११- पादपङ्क्तिगायत्री (५+५+५+५+६)=२६ वर्णाः
१२- भुरिक्पदपङ्क्तिगायत्री (५+५+५+६+६)=२७

**उष्णिक्** **पाद-वर्णाः**

१३- ककुप्न्यङ्कुशिरानिचृदुष्णिक् (११+१२+४)= २७
१४- तनुशिरा उष्णिक् (११+११+६)=२८ वर्णाः ।
१५- पिपीलीकामध्योष्णिक् (११+६+११)=२८ वर्णाः ।
१६- अनुष्टुब्गर्भोष्णिक् (५+८+८+८)=२९ वर्णाः ।

**अनुष्टुप्** **पाद-वर्णाः**

१७- विराडनुष्टुप् (१०+१०+१०=३०) वर्णाः ।

१८- काविराडनुष्टु (९+९+१२)=३० वर्णाः ।
१९- महापदपङ्क्तिरनुष्टुप् (५+५+५+५+५+६)= ३१ वर्णाः ।
२०- नष्टरूपानुष्टुप् (९+१०+१३)=३२ वर्णाः ।

**बृहती** **पाद-वर्णाः**

२१- पिपोलिकामध्याबृहती (१३+८+१३)=३४ वर्णाः ।
२२- विष्टार बृहती (८+१०+१०+८)=३६ वर्णाः ।
२३- विषमपदाबृहती (९+८+११+८)=३६ वर्णाः ।

**पंक्तिः** **पाद-वर्णाः**

२४- विराट्पङ्क्तिः (१०+१०+१०+१०)=४०वर्णाः ।

**त्रिष्टुप्** **पाद-वर्णाः**

२५- विराट्स्थाना त्रिष्टुप् (९+९+१०+११) =३९
२६- विराट्स्थाना त्रिष्टुप् (९+१०+११+११) =४१
२७- विराट्स्थाना त्रिष्टुप् (१०+१०+९+११) =४०
२८- विराट्पूर्वा त्रिष्टुप् (१०+१०+८+८+८)=४४
२९- पूर्वज्योतिष्मती त्रिष्टुप् (८+१२+१२+१२) =४४
३०- पश्चाज्ज्योतिष्मती त्रिष्टुप् (१२+१२+१२+८)= ४४ वर्णाः ।
३१- पूर्वमध्या ज्योतिष्मती त्रिष्टुप् (१२+८+१२+१२) =४४ वर्णाः ।
३२- पश्चान्मध्या ज्योतिष्मती त्रिष्टुप् (१२+१२+८+१२)=४४ वर्णाः ।

३३- यवमध्या त्रिष्टुप् (८+८+१२+८+८) = ४४ वर्णाः ।

३४- अभिसारिणी त्रिष्टुप् (१०+१०+१२+१२)=४४ वर्णाः ।

३५- महापङ्क्ति त्रिष्टुप् (८+८+७+६+७+९)=४५ वर्णाः ।

३६- उपजगती त्रिष्टुप् (१२+१२+११+११) = ४६ वर्णाः ।

इत्थमाचार्यशौनकस्य स्वतन्त्ररूपेण चतुःषष्टिश्छन्दांसि लक्षितानि सन्ति । अन्यानि यानि छन्दांसि ऋक्प्रातिशाख्ये प्राप्यन्ते, तानि निदानसूत्रे पतञ्जलिना पूर्वमेव लक्षितानि परमत्र तेषां नामानि महर्षिशौनकेन परिवर्तितानि । द्वितीय-सप्तके छन्दसां नामान्तराणि कृतानि पादविधाने च तेषामपि पादा अङ्कितास्तेन[८] । यथा—

१- अतिजगती (१२+१२+१२+८+८)=५२ वर्णाः ।
२- शक्वरी (८+८+८+८+८+८+८)=५६ वर्णाः ।
३- अतिशक्वरी (१६+१६+१२+८+८)=६० वर्णाः ।
४- अष्टिः (१६+१६+१६+८+८)=६४ वर्णाः ।
५- अत्यष्टिः (१२+१२+८+८+८+१२+८) =६८
६- धृतिः १२+१२+८+८+८+१६+८)=७२ वर्णाः
७- अतिधृतिः (१२+१२+८+८+८+१२+८+८)= ७६ वर्णाः ।

(८) ऋक्प्रातिशाख्यम्-१६/५३-५५

आचार्यशौनकेन तृतीयसप्तकेऽपि छन्दसां नामान्तराणि कृतानि, यान्यद्य प्रचलितानि सन्ति[9]। यथा—

१- कृतिः (८० वर्णाः), २- प्रकृतिः (८४ वर्णाः), ३- आकृतिः (८८ वर्णाः), ४- विकृतिः (९२ वर्णाः), ५- संस्कृतिः (९६ वर्णाः), ६- अभिकृतिः (१०० वर्णाः), ७- उत्कृतिः (१०४ वर्णाः)।

इत्थमेव शौनकेन पतञ्जलेः प्राग्गायत्रीपञ्चकेऽपि छन्दसां नामानि परिवर्तितानि[10]। यथा—

१- मा (४ वर्णाः) २- प्रमा (८ वर्णाः)। ३- प्रतिमा (१२ वर्णाः)। ४- उपमा (१६ वर्णाः), ५- समा (२० वर्णाः)

प्रथमसप्तके द्वितीयसप्तके च शौनकेन कृतानि छन्दसां नामान्तराण्येवाऽद्य छन्दःशास्त्रे प्रचलितानि सन्ति।

## ३) ऋक्सर्वानुक्रमणी

आचार्यकात्यायनकृता ऋक्सर्वानुक्रमणी तस्याऽनुक्रमणीषु सर्वाधिकप्रसिद्धरचना वर्तते। इयं सूत्रनिबद्धा रचना। अत्र प्रतिसूत्रे सपादा ऋचासंख्या, सूक्तस्य ऋषेर्नाम गौत्रं च, मन्त्राणां देवतानिर्देशपुरस्सरं छन्दसां क्रमबद्ध उल्लेखः प्राप्यते। अस्यां रचनायामपाणिनीयपदानां बहुलताऽस्ति। अतोऽ-

---

९- ऋक्प्रातिशाख्यम्-१६/५६-५७

१०- ऋक्प्रातिशाख्यम्-१७/११

स्या रचयिता कात्यायनो वार्तिककारवैय्याकरणकात्यायनाद् भिन्न एव[11]। शुक्लयजुर्वेदीयवाजसनेयिप्रातिशाख्यमप्यस्यैव छन्दस्कारककात्यायनस्यैव रचना। अत्राष्टाध्यायाः सन्ति, येषु परिभाषास्वरसन्धीनां विवेचनं लभ्यते। अत्राऽनेकसूत्रेषु शाकल्यकाश्यपापेक्षया शाकटायनमतानां निर्देशविशेषः,[12] किन्तु वार्तिककारकात्यायनमतानामभाव एव। एतदेव द्वयोर्ग्रन्थकारयोर्भिन्नताप्रमाणम्।

वाजसनेयिप्रातिशाख्यरचयिता कात्यायनो वैयाकरण-पाणिनेः पूर्वोऽस्ति। एतत्पाणिनेः रचनाशैलीप्रगाढतायाः परिभाषाणां संज्ञाणां चैकरूपतायाः, कात्यायनकृतस्य प्रातिशाख्यस्य शैल्या अप्रौढतायाश्चाऽवलोकनेन[13] स्पष्टीभवति। आचार्यबलदेवोपाध्यायमतेन वाजसनेयिप्रातिशाख्यस्य प्रथमेऽध्याये १३३ तमसूत्रतः १३७ तमसूत्रपर्यन्तं यस्य विषयस्य प्रतिपादनमस्ति, तत्सर्वमुचितं व्यवस्थितञ्च विद्यते। एभ्यः सूत्रेभ्यः- 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्यादेः' 'षष्ठीस्थाने योगाः' इति सूत्राणि पाणिनिनाऽष्टाध्याय्यां संगृहीतानि। फलत एतदनुशीलनेन कात्यायनकृतं वाजसनेयिप्रातिशाख्यं पाणिनेः प्राचीनतरम्।

---

११- बलदेव उपाध्याय, वैदिक साहित्य और संस्कृति, पृष्ठः ३५०-५१।

१२- कात्यायनकृतवाजसनेयिप्रातिशाख्यम्- ३/९,१०,४/५, १२/४-५।

१३- वाजसनेयिप्रातिशाख्यम्-१/३८, ४०, ५२, ३/९, १०

बहवो विद्वांसः पिङ्गलं पाणिनिसमकालीनं तस्याऽनुजं वा मन्यन्ते[14]।अत ऋक्सर्वानुक्रमणीकारकात्यायनो वैयाकरण कात्यायनाद् भिन्नतया पिङ्गलात्पूर्ववर्ती सिद्ध्यते। ऋक्सर्वानुक्रमण्यामष्टषष्टिसंख्यकानां ६८ छन्दोभेदानां लक्षणानि प्राप्यन्ते, येषु कात्यायनस्य स्वतन्त्ररूपेण लक्षितानि निम्नाङ्कितानि नव ९ छन्दांसि सन्ति। एषां लक्षणानि पूर्वेषामाचार्याणां रचनासु नैव प्राप्यन्ते।

## कात्यायनस्य स्वतन्त्रलक्षितानि छन्दांसि

| छन्दोनाम | पाद-वर्णाः |
|---|---|
| १- प्रतिष्ठागायत्री (८+७+६)= | २१ वर्णाः। |
| २- विराट् शङ्कुमती गायत्री (१०+१०+५)= | २५ वर्णाः |
| ३- स्वराड्गायत्री (८+८+१०)= | २६ वर्णाः। |
| ४- विषमपदोष्णिक् ((७+१०+११)= | २८ वर्णाः। |
| ५- यजुरन्तानुष्टुप् (८+८+७+८+१०)= | ४१ वर्णाः। |
| ६- विपरीता बृहती (८+११+८+१०)= | ३७ वर्णाः। |
| ७- स्वराट्पङ्क्तिः (१०+१०+११+११)= | ४२ वर्णाः। |
| ८- विराट्पङ्क्तिः (१०+१२+१०+१२)= | ४४ वर्णाः। |
| ९- सावित्री त्रिष्टुप् (७+८+८+७+८+६)= | ४४वर्णाः |

इति द्वितीयोऽध्यायः।

(१४) षड्गुरुशिष्यकृतपिङ्गलसूत्रटीका वेदार्थदीपिका-३/३३

### अथ तृतीयोऽध्यायः

## ४) छन्दःसूत्रम्

छन्दःसूत्रस्य रचयिताऽऽचार्यः पिङ्गलोऽस्ति । नैके विद्वांसः पिङ्गलं पाणिनिकाले समुत्पन्नं मन्यन्ते । षड्गुरुशिष्येण छन्दः सूत्रटीकायां वेदार्थदीपिकायां पिङ्गलः पाणिनेरनुजोऽङ्गीकृतः[1] । एतन्मतं श्रीयुधिष्ठिरमीमांसकस्याऽपि[2] । महाभारते सर्पसत्रे सुरक्षितनागेषु पिङ्गलोऽपि गणितः[3]। मत्स्यपुराणानुसारेण पिङ्गलो नगपुत्र[4] आसीत् । अतः स पिङ्गलनागोऽपि[5] कथितः । एके विद्वांसो महर्षिपाणिनेराचार्यपिङ्गलस्य चाऽऽचार्यवर्षस्य शिष्यत्वमङ्गीकृत्य द्वयोर्भ्रातत्वं स्वीकुर्वन्ति[6]। नाट्यशास्त्रकुर्तुर्भरतमुनेः पुत्रशतके पिङ्गलोल्लेखः[7] प्राप्यते । अतः पिङ्गलो भरतमुनेः परवर्ती मन्यते ।

---

१- षड्गुरुशिष्यकृतवेदार्थदीपिका-३/३३

२- युधिष्ठिरमीमांसककृतसंस्कृतव्याकरणशास्त्रेतिहासपृष्ठः १३२

३- महाभारतम्, आदिपर्व-३५/६

४- मत्स्यपुराणम्-१९६/६,३२

५- 'याः षट् पिङ्गलनागाद्यैः छन्दोविचितयः कृताः ।'
केo एनo भटनागरसम्पादितनिदानसूत्रभूमिकापृष्ठः २५

६- अयोध्यानाथकृता छन्दःसूत्रटीका कादम्बिनी, प्राक्कथन पृष्ठः ८-९

७- भरतमुनिकृतनाट्यशास्त्रम्—१/२६

छन्दःसूत्रमेकः सूत्रग्रन्थोऽस्ति। अत्र वैदिकलौकिकच्छन्दोनिरूपणम्। अस्याऽष्टाऽध्यायाः सन्ति, येषु ३२६ ग्रहनेत्रकालाङ्कितानि सूत्राणि। प्रारम्भाच्चतुर्थाध्यायस्य सप्तमसूत्रपर्यन्तं ११९ निधिचन्द्रेशाङ्कितानां वैदिकच्छन्दसां लक्षणानि प्राप्यन्ते। ग्रन्थस्यास्य १४ चतुर्दश[8] टीकाः सन्ति, यासु सर्वाधिकप्राचीना हलायुधभट्टकृता टीका मृतसञ्जीवनी दशमशताब्द्या[9] रचनास्ति। स्वामिदयानन्देन पिङ्गलाचार्यकृतच्छन्दःसूत्रभाष्योल्लेखोऽपि [10]कृतः, किन्तु स नात्र लभ्यते। इदानीमखिलानन्दशर्मकृतं वैदिकभाष्यमुपलभ्यते[11]।

छन्दःसूत्रमेक एतादृशश्छन्दोग्रन्थोस्ति, यः पतञ्जलिशौनककात्यायनकृतच्छन्दोविवरणानन्तरं स्वतन्त्ररूपेण लिखितो ग्रन्थः, यत्र लक्षितेषु ११९ वैदिकेषु छन्दस्सु पिङ्गलस्य स्वतन्त्रलक्षितान्येकादश छन्दांसि सन्ति, यानि पूर्वाचार्यरचनासु नैव प्राप्यन्ते। तानि सन्ति—

## पिंगलस्य स्वतन्त्रलक्षितच्छन्दांसि

| छन्दोनाम | पादवर्णाः | पूर्णसंख्या |
|---|---|---|
| १- अतिपादनिचृद् गायत्री | (६+८+७)= | २१ |

---

८- विनयसागरकृते वृत्तमौक्तिकस्याऽष्टमपरिशिष्टे- छन्दःशास्त्र के ग्रन्थ और उनकी टीकाएँ।

९- छन्दः सूत्रटीका कादम्बिनी - प्राक्कथनपृष्ठाः १०

१०- दयानन्दकृता ऋग्वेदादिभाष्यभूमिका, पृष्ठाः २९३

११- अखिलानन्दशर्मकृतच्छन्दःसूत्रवैदिकभाष्यम्, वि० सं० १९६५, मेरठ

| छन्दोनाम | पादवर्णाः | पूर्णसंख्या |
| --- | --- | --- |
| २- नागी गायत्री | (९+९+६)= | २४ |
| ३- वाराही गायत्री | (६+९+९)= | २४ |
| ४- पिपीलकमध्या गायत्री | (९+६+९)= | २४ |
| ५- बृहती | (१०+१०+८+८)= | ३६ |
| ६- स्कन्धोग्रीवी[12]बृहती | (८+१२+८+८)= | ३६ |
| ७- सतो बृहती[13] | (१२+१२+१२)= | ३६ |
| ८- अल्पशोऽक्षरपङ्क्तिः | (५+५)= | १० |
| ९- पदपङ्क्तिः | (४+६+५+५+५)= | २५ |
| १०- पुरस्ताज्ज्योतिस्त्रिष्टुप् | (११+८+८+८+८)= | ४३ |
| ११- मध्यज्योतिस्त्रिष्टुप् | (८+८+११+८+८)= | ४३ |
| १२- उपरिष्टाज्ज्योतिस्त्रिष्टुप् | ‘८+८+८+८+११= | ४३ |
| १३- पुरस्ताज्ज्योतिर्जगती | (१२+८+८+८+८)= | ४४ |



## ५) उपनिदानसूत्रम्

उपनिदानसूत्रमेकश्छन्दोविषयकग्रन्थः । अस्यापरं नामधेयं ‘सामगानां छन्दः’ । अत्र वैदिकच्छन्दोविवरणम् । अस्य रचयिता कः ? इति ग्रन्थेन न ज्ञायते, किन्तु ग्रन्थान्तेऽस्य प्रव-

---

१२- एतच्छन्द आचार्यंक्रौष्टुकिकृतं मन्यते, यस्य लक्षणमाचार्यं पिङ्गलेन छन्दःसूत्रे प्रकाशितम् । छन्दःसूत्रम्- ३/२९

१३- एतच्छन्दः आचार्यताण्डिकृतं मन्यते, यस्य लक्षणमाचार्यं पिङ्गलेन छन्दः सूत्रे प्रकाशितम् । छन्दःसूत्रम्-३/३६

क्ता गार्ग्य उल्लिखितः[14] । ग्रन्थान्ते गार्ग्योल्लेखेन यदीयं रचना महर्षिगार्ग्यकृता मन्यते, तर्हि ग्रन्थान्ते पद्यचतुष्टयान्तर्गते छन्दोज्ञानपरम्परात्मके प्रथमपद्ये पिङ्गलोल्लेखान्महर्षिगार्ग्यकृतिर्न सिद्ध्यति[15] । ऐतिहासिकपरम्परया महर्षिगार्ग्यो यास्कात्प्राचीनः पिङ्गलश्च यास्कादर्वाचीनः[16] । यास्केन निरुक्ते गार्ग्यस्य निरुक्तकारेषूल्लेखः[17] कृतः । पिङ्गलेन छन्दस्कारेषु यास्कः[18] समुल्लिखितः ।

यदीयं रचना महर्षिगार्ग्यस्याऽभविष्यत्तदत्र पिङ्गलोल्लेखो नाऽभविष्यत् । अस्य रचयित्रा पिङ्गलाच्छन्दोज्ञानप्राप्त्या सह निदानसूत्रोल्लेखोऽपि कृतः । येन पतञ्जलिपिङ्गलयोरनन्तरं लिखितेयं रचना । अतोऽस्य रचयिता कोऽपि गार्ग्यगोत्रीयो गार्ग्यनामको विद्वान् महर्षिगार्ग्याद् भिन्नः[19] । अतश्छन्दः सूत्रात्पश्चात्कृतेयं रचना । अत्र ६६षट्षष्टिवैदिकच्छन्दोलक्षणानि प्राप्यन्ते, येषूपनिदानकारस्य स्वतन्त्ररूपेण लक्षिते छन्दोद्वये रचनाकारस्यैकं निजं द्वितीयं ताण्डिकृतमस्ति ।

---

१४- इत्याह गार्ग्यो गार्ग्यः (पाण्डुलिपिः-१) इत्याह भगवान् गार्ग्यो गार्ग्यः (पाण्डुलिपिः-२) इमे द्वे पाण्डुलिपी वाराणस्यां सरस्वतीभवनसंस्कृतपुस्तकालये प्राप्येते ।

१५- 'ब्राह्मणात्ताण्डिनश्चैव पिङ्गलाच्च महात्मनः ।' उपनिदान सूत्रम् ८/१

१६- मङ्गलदेवकृत उपनिदानसूत्र-परिचयः, पृष्ठः-२

१७- 'न सर्वाणि इति गार्ग्यः ।' यास्ककृतनिरुक्तम्-१/१२

१८- 'उरोबृहती यास्कस्य ।' पिङ्गलकृतच्छन्दःसूत्रम्-३/३०

१९- मङ्गलदेवकृत उपनिदानसूत्र-परिचयः, पृष्ठः-२

## उपनिदानकारगार्ग्यस्य स्वतन्त्रलक्षिते छन्दसी

| छन्दोनाम | पादवर्णाः | पूर्णसंख्या |
|---|---|---|
| १- स्वराड् गायत्री | (९+९)= | १८ |
| २- विष्टारपङ्क्तिः | (८+१२+८+१२)= | ४० |

एतद्द्वितीयं छन्द उपनिदानकारस्ताण्डिकृतं मन्यते।



## ६) अग्निपुराणम्

प्राचीनभारतीयसाहित्ये पुराणानां विशिष्टस्थानमस्ति। पुराणानि धर्मदर्शनराजनीतिभूगोलेतिहासकलादिसर्वज्ञानभण्डाराः सन्ति। प्रतियुगबहुविधज्ञानराशिरेकत्रपुञ्जीभूतः[20] पुराणेषूपलभ्यते। अग्निपुराणे कोषव्याकरणसाहित्यच्छन्दोऽलङ्कारज्योतिषाख्यानोपाख्यानादिनानाविषयाणां प्राचीनसामग्री सङ्कलिता[21]। अस्य ३८३ अग्निसिद्धिकालाङ्किता अध्यायाः ११४५७ ऋषिवाणयुगरुद्राङ्कितान्यनुष्टुप्पद्यानि सन्ति। अस्य ३२८ तः ३३५ पर्यन्तमष्टाध्यायेषु छन्दोविवरणं प्राप्यते, यस्याऽऽधारः पिङ्गलोक्तं छन्दःसूत्रं वर्तते अतः स्पष्टमस्ति यदग्निपुराणे प्रकाशितं छन्दोनिरूपणं पिङ्गलात्परवर्तिनः कस्यचिद्विदुषो रचनाऽस्ति[22]। छन्दोविषयका-

---

२०- बलदेवोपाध्यायसम्पादितमग्निपुराणम्, भूमिकापृष्ठः-१

२१- S. K. De, History of Sanskrit Poetics, Part II, P. 54.

२२- 'छन्दो वक्ष्ये मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम्।' अग्निपुराणम्-३२८/१

ध्यायेषु प्रथमेऽध्यायत्रये वैदिकच्छन्दोविवरणम्, अन्यस्मिन्नध्यायपञ्चके लौकिकच्छन्दोविवरणमस्ति। अत्र शतमनुष्टुप्पद्यानि । इदमग्निपुराणमाचार्यबलदेवोपाध्यामसम्पादितं वर्तते।

श्रीरामशर्मसम्पादितेऽग्निपुराणे १६९ तः १७३ पर्यन्तमध्यायपञ्चके प्रथमेऽध्यायद्वये वैदिकच्छन्दोनिरूपणमन्ते चाध्यायत्रये लौकिकच्छन्दोनिरूपणं प्राप्यते[23]। अत्रापि श्लोक संख्या शतमेव अनयोः संस्करणयोः श्लोकसंख्या तु समाना परमध्यायेष्वन्तरम्, क्वचित्क्वचिच्च पाठभेदोऽपि। अग्निपुराणकारस्य ४ चत्वारि स्वतन्त्रलक्षितानि वैदिकच्छन्दांसि। अन्यानि छन्दांसि पतञ्जलिशौनक—कात्यायन—पिङ्गल—गार्ग्यादिपूर्ववर्तिच्छन्दः प्रवक्तृरचनासु लक्षितानि विद्यन्ते।

**अग्निपुराणकारस्य ४ स्वतन्त्रलक्षितवैदिकच्छन्दांसि**

| छन्दोनाम (२४) | पादवर्णाः | |
|---|---|---|
| १- वर्धमाना गायत्री | (६+८+८)= | २२ वर्णाः। |
| २- वर्धमाना गायत्री | (६+८+७)= | २१ वर्णाः। |
| ३- परोष्णिक् | (८+८+१२)= | २८ वर्णाः। |
| ४- पदपङ्क्तिः | (५+४+६+६+६)= | २७ वर्णाः। |



२३- श्रीरामशर्मसम्पादितम् अग्निपुराणम्, संस्कृतिसंस्थानम् बरेली-१९६९

(२४) अग्निपुराणम्-१७०/३-७

## अथ चतुर्थोऽध्यायः

## ७) जयदेवच्छन्दः

जयदेवच्छन्द एकश्छन्दोविषयको ग्रन्थः। अस्य रचयिता जयदेवश्छन्दश्शास्त्रीयप्राचीनलेखकोऽस्ति। प्राकृतभाषायाश्छन्दोग्रन्थस्य स्वयम्भूच्छन्दसो रचयिताऽष्टमशताब्द्याः स्वयम्भूर्यतिसमर्थने जयदेवमुल्लिखति[1]। यथा—

जअदेअ पिंगला सवकयंमि दोच्चि अ जइं समिच्छंति।
मंडव्व—भरह—कासव—सेवत—पमुहा न इच्छंति॥[2]

छन्दःसूत्रवृत्तिकारो दशमशताब्दस्य हलायुधः स्ववृत्तौ जयदेवं तदुपनामश्वेतपटेन समसद्धरति। यथा—

वान्तैर्वंक्र इति प्रोक्तं यैश्च श्वेतपटादिभिः।
अन्यदतोऽपि वितानं श्वेतपटेन यदुक्तम्॥[3]

जयदेवो जैनलेखक आसीत्। अतो जैनेतरे लेखकास्तं श्वेताम्बरजैनत्वेन 'श्वेतपट' विशेषणेनाऽलङ्कुर्वन्ति स्म। वृत्तरत्नाकरवृत्तिकारस्त्रयोदशशताब्दस्य सुल्हणः श्वेतपटनाम्ना जयदेवोल्लेखं करोति[4]। कन्नडछन्दःशास्त्रीयग्रन्थे छन्दोऽम्बु-

---

१- स्वयम्भूध्रुवधारावर्षस्य ७८०-७९४ ईशवीये वर्षे मन्त्रिरयडाधनञ्जयस्याऽऽश्रितकविरासीत्। द्रष्टव्या-राहुल सांकृत्यायनकृता हिन्दीकाव्यधारा, पृ० २२

२- स्वयम्भूच्छन्दः- १/७१,१४४

३- हलायुधकृतच्छन्दःसूत्रवृत्तिः- १/१०, ५/८

४- अन्यदतोहि वितानमिति शूद्रश्वेतपटजयदेवेन यदुक्तं 'भौगितिचित्रपदागः' इत्यनेन गतार्थत्वात्।
द्रष्टव्या-वत्तरत्नाकरटीका सुकविहृदयानन्दिनी

धौ तल्लेखकेन नागवर्मणा ९९० ईशवीये वर्षे जयदेवोल्लेखः कृतः[5] । परवर्तिनश्छन्दःशास्त्ररचयितारस्त्रिविक्रम[6] - जयकीर्ति[7]-हेमचन्द्रादयः[8] स्वरचनासु जयदेवनामोल्लेखं कृतवन्तः अतो जयदेवसमयः ७०० सप्तमशताब्दो मन्यते ।

अष्टाध्यायात्मकं जयदेवच्छन्दः । अस्य प्रथमेऽध्याये लघुगुरुवर्ण-गण-यत्यादिविचारः, द्वितीये तृतीये च वैदिकच्छन्दोविवेचनम्, चतुर्थात्सप्तमाध्यायपर्यन्तं लौकिकवृत्तनिरूपणमष्टमे च छन्दःप्रस्तारप्रक्रियाप्रतिपादनम् । हर्षटकृता विवृत्तिः प्राप्यते, यस्यां षष्ठाध्यायस्य ३९ एकोनचत्वारिंशसूत्रपर्यन्तं सप्तमाध्यायस्य चतुस्त्रिंशपर्यन्तं च[9] छन्दोविवरणमस्ति, परं जयदेवच्छन्दसि षष्ठेऽध्याये ४६ सूत्राणि सप्तमेऽध्याये च ३७ सूत्राणि सन्ति । अस्य लक्षितेषु वैदिकच्छन्दस्सु स्वतन्त्ररूपेण लक्षितानि १३ त्रयोदश छन्दांसि सन्ति । इतराणि लक्षितानि छन्दांसि पूर्ववर्तिच्छन्दःप्रवक्तृरचनासु प्राप्यन्ते ।

---

५- द्रष्टव्यः कुन्दनगारः, बम्बईविश्वविद्यालय-पत्रिका,सितम्बरः १९४७, पृष्ठः ९

६- त्रिविक्रमकृतवृत्तरत्नाकरव्याख्या, द्रष्टव्याः पीटरसनस्य चतुर्थरिपोर्टपृष्ठाः २७ (**P. 27, B. of ms. No. 12, of BBRAS., Bombay.**)

७- जयकीर्तिकृतच्छन्दोऽनुशासनम्-८/१९

८- हेमचन्द्रकृतच्छन्दोऽनुशासनवृत्तिभागः-३/५२/१

९- ह० दे० वेलणकरसम्पादिते जयदामन्नामके छन्दोग्रन्थे जयदेवच्छन्दो विवृतौ षष्ठाध्यायसमाप्तिपृष्ठः-३१, सप्तमाध्यायसमाप्तिपृष्ठः-३६ च ।

## जयदेवस्य स्वतन्त्रलक्षितानि १३ छन्दांसि

छन्दोनाम पादवर्णाः

१- सतोबृहती (८+८+१०+१०)=३६ वर्णाः ।
२- आर्षीपङ्क्तिः (८+१२+१०+१०)=४० वर्णाः ।
३- वृद्धार्षी पङ्क्तिः (१२+१२+१०+१०)=४४ वर्णाः
४- आर्ष्यक्षरपङ्क्तिः (५+५+१०+१०)=३० वर्णाः ।
५- आर्षी त्रिष्टुप् (१२+८+८+८+८)=४४ वर्णाः ।
६- पुरस्ताज्ज्योतिष्मती त्रिष्टुप् (८+११+११+११)=४१
७- पूर्वमध्ये ज्योतिष्मती त्रिष्टुप् (११+८+११+११)=४१
८- उत्तर मध्ये ज्योतिष्मती त्रिष्टुप् (११+११+८+११) =४१ वर्णाः ।
९- उपरिष्टाज्ज्योतिष्मती त्रिष्टुप् (११+११+११+८) =४१ वर्णाः ।
१०- आर्षी जगती (१२+१२+८+८+८)=४८ वर्णाः ।
११- शंकुमती (५+६+६)=१७ वर्णाः ।
१२- ऋक् पिपीलकमध्या (८+५+८)=२१ वर्णाः ।
१३- ऋक् यवमध्या (८+९+८)=२५ वर्णाः ।



## ८) छन्दोऽनुक्रमणी

छन्दोऽनुक्रमणी - रचयिता वेङ्कटमाधवो दक्षिणापथे चोलदेशवास्तव्य आसीत् । अस्य पिता वेङ्कटाचार्यस्तथा पितामहो माधव आसीत् । माता सुन्दरी मातामहो भवगो

लोऽस्य। अयं कौशिकगोत्रीयो[10] बभूव। अनेन भाष्यं लिखितमृग्वेदसंहितायाम्। अस्मिन् भाष्येऽनेन यद्वैदिकच्छन्दोविवरणमुल्लिखितम्।' तदेव छन्दोऽनुक्रमणी कथ्यते। त्रयोदश १३०० शताब्दस्य केशवस्वामिना स्वकोषग्रन्थे नानार्थार्णवसंक्षेपे माधवाचार्यसूरिनामोल्लेखः कृतः। यथा—

द्वयोस्त्वश्वे तथा प्राह स्कन्दस्वाम्यृक्षु भूरिशः।
माधवाचार्यसूरिश्च को अश्वेत्यृचि भाषते?

अनेन ज्ञायते यन्माधवाचार्यसूरिणा ऋग्वेदे १/८/४/१६ संख्याङ्किताया ऋचाया व्याख्यायां गोशब्दस्याऽर्थोऽश्वः कृतः। वेङ्कट माधवोक्ताया ऋचाया भाष्येऽपि स एवार्थः प्राप्यते। अनोऽनेन निर्देशेन वेङ्कटमाधवस्य समयस्त्रयोदशशताब्दात्पूर्वं[11] एव निश्चीयते। पण्डितः साम्बशिवशास्त्री त्वस्य समयं १०५०—११५० ईशवीयवर्षमध्ये[12] मन्यते।

अस्मिन् ग्रन्थे वैदिकच्छन्दोवर्णनमस्ति, यत्र प्रथमसप्तकस्य गायत्रीतो जगतीपर्यन्तमष्टपञ्चाशत् ५८ छन्दोभेदलक्षणानि प्राप्यन्ते। द्वितीयसप्तकच्छन्दोविवरणमपि प्राप्यते किन्तु तृतीयसप्तकच्छन्दोनामान्यपि न सन्ति। अत्र प्रगाथवर्णनं लभ्यते। येषां छन्दसां लक्षणानि वेङ्कटमाधवेन कृतानि, तानि सर्वाणि पूर्वाचार्यरचनासु प्राप्यन्ते। अतो वेङ्कटमाधवस्य नास्ति किमपि स्वतन्त्रलक्षितच्छन्दः।



---

१०- ऋग्भाष्यम् अनन्तशयनग्रन्थावली, भूमिका पृ० ७-८
११- बलदेवोपाध्यायकृत वैदिकसाहित्य और संस्कृति पृ. ५२
१२- स्कन्दस्वामिकृता ऋग्वेदभाष्यभूमिका, पृष्ठः-७

## १) वृत्तमुक्तावलिः

वृत्तमुक्तावलिरचयिता तैलङ्गवंशीयः कविकलानिधिः श्रीकृष्णभट्टोऽस्ति। अस्य जन्मसंवत् १७२५ (१६६९ ई०) तथा मृत्युसंवत् १८०० (१७४४ ई०) स्तः[13]। अयं सवायीजयसिंहस्य सभाकविरासीत्। अनेन संस्कृते सप्त व्रजभाषायां च त्रयोदश रचनाः कृताः[14]। अस्य द्वे छन्दोरचने स्तो व्रजभाषायां वृत्तचन्द्रिका संस्कृते च वृत्तमुक्तावलिः।

वृत्तमुक्तावल्यां गुम्फत्रयमस्ति। प्रथमगुम्फे २०५ पञ्चोत्तरशतद्वयवैदिकच्छन्दोविवरणं लभ्यते। द्वितीयगुम्फे ५४ चतुः पञ्चाशन्मात्रिकच्छन्दस्सु व्रजभाषायाः केषाञ्चिच्छन्दसां संस्कृतीकरणमपि प्राप्यते। तृतीये गुम्फे १६० षष्ट्यधिकशतवृत्तानां सोदाहरणनिरूपणमस्ति, यत्र ३७ सप्तत्रिंशद्दण्डकलक्षणानि सन्ति। अत्र लक्षितेषु २०५ वैदिकेषु छन्दस्सु श्रीकृष्णभट्टस्य स्वतन्त्रलक्षितानि ४ चत्वारि छन्दांसि सन्ति। अन्यानि छन्दांसि पूर्वाचार्यग्रन्थेषु लक्षितानि सन्ति।

### श्रीकृष्णभट्टस्य स्वतन्त्रलक्षितानि ४ छन्दांसि

| छन्दोनाम | वर्णपादाः | पूर्णसंख्या |
|---|---|---|
| १- प्रतिष्ठा गायत्री | (७+६+८) | =२१ |
| २- न्यंकुशिरा उष्णिक् | (११+१२+११+१२) | =४६ |
| ३- ज्योतिष्मती त्रिष्टुप् | (११+८+८+८) | =३५ |
| ४- ज्योतिष्मती जगती | (१२+८+८+८) | =३६ |



**इति चतुर्थोऽध्यायः।**

---

१३- श्रीकृष्णभट्टकृतवृत्तमुक्तावलिः, प्रारम्भिक निवेदनम् पृष्ठः- ६

१४- „ पृष्ठः- ५